**सभायां द्रोपद्यै विपदि न चिराच्चीरमददुः**
**रणे मोहोत्पन्नेऽददत खलु गीताऽमृतमिदम्।**
**अकाण्डे चैद्ये वै सततमपलापं विलपने**
**शिरश्छेत्ता हासे नरकरिपुकृष्णस्तव तनुः।।35।।**

हे माँ! आपने ही सभा में द्रौपदी पर विपत्ति आने पर उसका चीर यथा शीघ्र बढ़ाया था, युद्ध में अर्जुन के मोहग्रस्त होने पर गीता रूपी अमृत पिलाया था, बिना अवसर ही (यज्ञ में) शिशुपाल द्वारा अपशब्दों की बौछार करने पर अनायास ही उसका सिर काट दिया था, वह कृष्ण आपका ही स्वरूप था।

**भाव** - माँ ललितेश्वरी ही भगवान श्री कृष्ण के रूप में अवतरित हुई थी।

**पशौ पाशाबद्धाः कलुषितजना गोचरगताः**
**मदान्धीभूतास्तेऽधिकगहनगर्ते कवलिताः।**
**विलीनास्संसारे विचलितमना बिन्दुविमुखाः**
**विमुक्ता एवैते भ्रमरहितबिन्दुं प्रतिगताः।।36।।**

जो बिन्दु (परब्रह्मरूपिणी पराम्बा) से विमुख हैं वे पशुभूत कलुषित जीव पाश में बंधे हुए मद से अंधे होकर गहन अन्धकारमय गढ्ढे (संसार) में फँसे हैं। वे इस संसार में ही लीन होकर भ्रमित हैं। और जो नि:संशय होकर बिन्दु (पराम्बा) की ओर गतिशील है वे ही मुक्त हो पाते हैं।

**भाव** - जैसे चक्र की धुरी से विमुख होने पर जीव कहीं भी चक्र पर बैठे वह भ्रमण में ही रहेगा। जो बिन्दु रूपी धुरी पर आ जाता है वह लम्बे चक्र लगाने से बच जाता है।

**शिवो वा शैवो वा गिरिधरवरो वा हलधरः**
**गुहो वा गोपो वापि गजवदनो वा कविवरः।**
**रमा वा रामो वा हलखचितरेखा जनकजा**
**तव स्तन्यं पीत्वा खलु भवति बोधो मतिमताम्।।37।।**

चाहे शिव हो या शिवभक्त, कृष्ण हो या बलराम, स्कन्द हो या ईश्वर, कविश्रेष्ठ गणपति, लक्ष्मी, श्री रामचन्द्र या माँ जानकी, कोई भी हो। हे माँ! आपका दूध (चेतन शक्ति) पीकर ही सबमें चेतनता आती है।

**भाव** - माँ के चैतन्य से ही सब देवादि गण चेतन एवं शक्ति सम्पन्न हैं।

**परारूपा शुद्धा खलु भवति नादामृतपदा**
**प्रपश्यन्तीशानी सितकमलगुण्या मनुभवा।**
**सुमध्या ध्याने हृद्गगनगमना वा बहुविधा**
**पृथग्कण्ठोद्भूता त्वमयि! भुवि वै वैखरि मता॥38॥**

हे माँ! आप शुद्ध नादात्मक रूप में परा वाणी, श्वेत कमल के समान प्रकाशित मन्त्र रूप में पश्यन्ती, ध्यानावस्था में हृदयाकाश में विविध रूपों वाली मध्यमा तथा कण्ठ से निर्गत होने वाली वैखरी स्वरूपा हो।

**भाव** - वाणी का समस्त विलास माँ का ही विलास है।

**श्मसानेष्वासक्तस्स्मरहरपिशाचास्सहचराः**
**तनौ भस्मालेपः भुजगवलयैर्भूषणविधिः।**
**भयाविष्टं सर्वं शिवपरिकरे गोचरगतं**
**त्वमेका मातङ्गी पशुपतिगृहे निर्भयभरा॥39॥**

श्मसान में निवास, भूत प्रेतों का संग, शरीर पर भस्म का लेपन, भयंकर सर्पों के कंकणाभूषण, होने से भगवान शिव का समस्त परिवेश भय को देने वाला है। हे माँ! पशुपति शिव के घर में केवल आप ही निर्भय से परिपूर्ण हो।

**भाव** - अर्थात् आपको देखकर ही भक्त शिव के वेशादि से उत्पन्न भय को त्याग आपके पास आ जाता है। आपके सहारे ही उसका साहस बढ़ता है।

**तवेच्छाशक्त्या संजनयति विधाताऽखिलभुवं**
**तवेच्छाशक्त्या पालयति जगदीशो भुविजनान्।**
**तवेच्छाशक्त्या रोजयति पशुभूतान्पशुपतिः**
**तवेच्छाशक्त्या सम्भवमभवमब्धिं प्रतरणे।।40।।**

हे माँ! आपकी इच्छा शक्ति से ब्रह्मा जी सृष्टि की रचना, विष्णु जी सृष्टि पालन तथा शिव जी सृष्टि संहार करते हैं। माँ! मैं अकिंचन् भी आपकी इच्छा शक्ति से ही आपके गुणगान में अथवा भवसागर को पार करने में समर्थ हुआ हूँ।

भाव – माँ की इच्छाशक्ति ही सृष्टि कार्य को संचालित करती है।

**उमां विस्मृत्यैवाहमहमिकया पङ्ककलितः**
**अहोरात्रं मायावरणवशगो नन्दति नरः।**
**क्रियाशक्त्याश्शक्त्या वहति भुजगो घूर्णितधरां**
**क्रियादक्षासाक्षादभिनयति नाना परिचरैः।।41।।**

माँ भवानी को भूलकर ही माया के वशीभूत होकर जीव मैं, मेरा इत्यादि कीचड़ में दिनरात डूबता है। माँ की क्रियाशक्ति से ही सर्पराज भ्रमणशील धरा को धारण करते हैं। वास्तव में माँ जगदम्बा ही विभिन्न रूपों के द्वारा कुशलतापूर्वक अभिनय करती हैं।

भाव – माँ की क्रियाशक्ति ही जगत् का संयोजन करती है।

**अहं दाता होता प्रवचनपटुः पण्डितवरः**
**ममाहंकारेणार्जितगरलरुग्णा मुनिजनाः।**
**तव ज्ञानागारे प्रविशति यदा बोधितनरः**
**तदा योगी साधुस्सदसदनुरागादपगतः।।42।।**

मैं दाता, हवनकर्त्ता, कथा प्रवक्ता तथा विद्वानों में श्रेष्ठ हूँ, इसी ममत्वादि विषैले अहंकार से ही प्राक्तन एवं नूतन मुनिजन रोगग्रस्त हैं। हे माँ! जब सजग होकर जीव आपके ज्ञान रूपी भवन में प्रविष्ट होता है तभी वह सच्चा योगी एवं सर्वश्रेष्ठ होकर सद्सद् अनुराग से पार हो जाता है।

भाव – माँ की ज्ञानाग्नि से ही जीव की ऐहिक एवं पारलौकिक आसक्ति भस्म हो जाती है।

**पिता वा माता वा सितदधिमुखो वा प्रियसुतः**
**पतिर्वा जाया वा सुविकसितलावण्यकलिका।**
**नृपो वा रङ्को वा विचरति चिरं कोटिकनकैः**
**तवाकर्षाबद्धो भ्रमति परिवारावरणगः॥43॥**

पिता हो माता हो या स्वच्छ दही से लिप्त मुख वाला प्यारा पुत्र हो। पति यो या नूतन खिली हुई कलिका के समान नवयौवना पत्नी हो। राजा हो या रंक हो सभी माँ पराम्बा की आकर्षण शक्ति के वशीभूत होकर परिवार रूपी आवरण में कनकादि विषयों में देर तक भटकते हैं।

भाव – जीव की भटकन का कारण माँ की आकर्षण शक्ति ही है।

**न वाणी वीणायाश्श्रुतिमधुरनादैश्श्रुतियुतैः**
**न गन्धर्वालापैस्स्वरलसितगानैरुचिकरैः।**
**तथैवात्मानन्दीभवति ललिताया न च यथा**
**कुटीमध्ये संकीर्तनजकरतालैः प्रमुदितः॥44॥**

श्री माता पराम्बा न तो संगीत श्रुतियों से युक्त तथा कानों को मधुर लगने वाले माँ सरस्वती की वीणा के नादों से, और न ही मनोहर स्वर से रूचिकर गन्धर्वों के आलाप भरे गीतों से वैसी प्रसन्नचित्त होती है जैसी साधारण कुटियों में कीर्तन करने वाले भक्तों की करताल से।

भाव – माँ भक्तों के आडम्बर हीन नामसंकीर्तन को ज्यादा महत्त्व देती हैं।

**सुराणामाचारैर्न रसयति नन्दीसुवचनैः**
**गणेशस्याश्लेषैरवति न शिवा बालचपलैः।**
**न कैलाशावासे शिवडमरुनादे रुचिकरा**
**परं भक्ताह्वाने घनरवमयूरीव चकिता॥45॥**

माँ ललिताम्बिका न तो देवताओं के सदाचार से, न नन्दी के

सुवचनों से वैसी प्रसन्न होती हैं। और बाल गणेश के चंचलता पूर्वक आलिंगन से भी वैसी सुखी नहीं होती हैं। कैलाश पर्वत पर भगवान शिव के डमरु की नादों में भी वैसी रूचि नहीं रखती है परन्तु भक्तों के प्रेम भरे आह्वानों पर तो जैसे बादल गर्जना से मयूरी उत्कंठित हो जाती है वैसी ही अवस्था वाली हो जाती हैं।

भाव – माँ को भक्तों का आह्वान सर्वोपरि है।

**शिवो वा शैवो वा तदनुगमको वा परिचरः**
**हरिर्वा स्मार्तो वा वसुपतिचरो वा प्रियधनः।**
**विधिर्वा सौरो वा गणपतिपरो वा मखकरः**
**इमेऽर्धाङ्गीरूपे तव यजनलग्नाः प्रथमतः।।46।।**

शिव हो या शैव अथवा शिव परिचर हो। विष्णु हो या वैष्णव या कुबेर का धनप्रेमी सेवक हो। ब्रह्मा जी हों या गणपति का पूजक हो अथवा यज्ञकर्त्ता हो। ये सभी पूजक देवता की अर्धाङ्गिणी के रूप में सर्वप्रथम आपका ही पूजन करते हैं।

भाव – चाहे कोई किसी भी देवता की उपासना करे वह वास्तव में उस देवता की शक्ति की ही उपासना है। अतः शक्ति ही सर्वोपरि है।

**सुनेत्रा मातङ्गी दशभुजवितण्डैर्रणमखे**
**जगद्रक्षाहेतौ रिपुदलसमिद्भिर्हुतभुजम्।**
**प्रबोध्य ज्वालाभिर्निजदलविकम्पं क्षयकरा।**
**तमो हृत्वा पद्मे! चरणजकराग्रैः कुरु गतिम्।।47।।**

सुनयना मातङ्गी ही अपनी दश भुजाओं के प्रसार से युद्ध रूपी यज्ञ में जगत की रक्षा के लिए शत्रुरूपी समिधाओं से अग्नि देव को प्रज्ज्वलित करके अपनी सेना की कम्पन को मिटाने वाली हैं। हे माँ पद्मा! मेरे अज्ञान रूपी अन्धकार को नष्ट कर मुझे चरणरश्मियों से शरणागति दें।

भाव – माँ शत्रुओं को सद्गति तथा भक्तों को अभय प्रदान करती हैं।

**भवाब्धौ जातानां ननु विगतकाले गतवतां**
**भविष्यद्भूतानामपि लघुगुरूणामनुदिनम्।**
**समारब्धानां च त्वमसि सकलाम्नायजननी**
**विधातुर्योनिस्त्वाममलकमलैस्सम्प्रति भजे॥48॥**

माँ ललिताम्बिका जगत में व्यापक भूत-वर्तमान एवं भविष्यकालिक समस्त छोटे बड़े सम्प्रदायों की जननी हैं। हे माँ! आप ब्रह्मा जी की भी उत्पत्ति स्थल हैं। मैं आपका स्वच्छ कमलों से पूजन करता हूँ।

भाव - माँ पराम्बा ही समस्त आम्नायों (धार्मिक सम्प्रदाय) की जननी हैं।

**अलंकारैः प्रीतां तरुणिजनसौभाग्यवरदां**
**सुहुंकारैर्रक्षोगणयुवतिगर्भ च्युतिकराम्।**
**विटंकारैश्शीघ्रं यमजनितभीतिप्रहरणीं**
**कथङ्कारं तां न स्मरणपथलिप्तामनुभजे॥49॥**

वस्त्रालंकारों से विभूषित, तरुणियों को सौभाग्य वर देने वाली, हुंकारों से राक्षसियों के गर्भ को गिराने वाली, ज्ञान के टंकार से यमराज के भय को हरण करने वाली माँ पराम्बा को, जो मेरे स्मृति पटल पर अंकित हैं उसको मैं क्यों नहीं भजूँ ?

भाव - महालक्ष्मी, महाकाली, महासरस्वती, स्वरूपिणी माँ का भजन किसे प्रियकर नहीं है। अर्थात् सबको प्रियकर है।

**विनम्राक्षीं साक्षीं विमलजलजाक्षीं सुनयनां**
**कृपेक्षापेक्षार्थी भयहरणशीलामनुभजे।**
**सुनेत्रेणैकेण त्वमयि! कुरु संसारतरणं**
**सहस्राक्षि! श्यामे! सुभर तिमिरोद्घाटनवरैः॥50॥**

स्नेहशील नेत्रों वाली, सर्वजनसाक्षी, निर्मल कमल जैसे नयनों वाली, भय हरण करने वाली, माँ को मैं कृपा दृष्टि की कामना से भजता हूँ।

हे हजार नेत्रों वाली! हे श्यामा! एक नेत्र की सुधादृष्टि से मुझे भी

संसार सागर से पार लगाओ और अज्ञानान्धकार को दूर करने वाले वरदान से मुझे भर दो।

भाव – माँ! आपके सहस्राधिक नेत्र है। बस एक नेत्र से मुझ याचक का भी कल्याण कर दो।

व्याकरण – कृपा + ईक्षा + अपेक्षा + अर्थी

**त्वदीयं सौन्दर्यं सकलरमणीनामनुपमं**
**तुलातीतं रूपं सुकरुणसुधासागरतटम्**
**न देवस्त्रिनेत्रो विरमति दिदृक्षावशगमाद्**
**कथं नेत्राभ्यां वा भवदतुलरूपं ननु जिहै॥51॥**

हे माँ! आपका सौन्दर्य समस्त रमणियों में अनुपम है। आपका रूप अतुल्य सुधा सागर का तट है। जब भगवान शिव आपको अपने तीन नेत्रों से लगातार देखने की तीव्र इच्छा से निहारते रहते हैं, पर तृप्त नहीं होते। तब मैं दो नेत्रों वाला आपके अनुपम रूप को मातृकृपा का इच्छुक क्यों न देखूँ ?

भाव – भगवान शिव पर साधन (नेत्र) भी अधिक है और सामर्थ्य (देव शक्ति) भी अधिक है। वे आपकी छटा को लगातार निहारते है तो मैं अल्प साधन (नेत्र) व सामर्थ्य (मनुष्य शक्ति) वाला आपकी अद्भुत झाँकी का आनन्द क्यों छोड़ूँ।

**विधाताहीनस्संभवति शिवहीनोऽपि च नरः**
**परं शक्त्या हीनो भवति बहुधा व्याकुलमनः।**
**अपर्णैका सेव्या त्रिभुवनतले शक्तिधवला**
**ततश्शान्तिं प्राप्याव्यवहितसुखं प्रापय भुवि॥52॥**

व्यक्ति ब्रह्माहीन, या शिवहीन भी जी सकता है। परन्तु शक्तिहीन होने पर प्रायः व्याकुल चित्त हो उठता है। अतः शक्ति प्राप्ति के लिए त्रिभुवन में केवल शक्तिपुंज भवानी की पूजा करो। और उनसे शान्ति को प्राप्त करके ब्रह्मानन्द का आस्वादन करो।

भाव – ब्रह्मानन्द (अव्यवहित सुख) और उसके साधन की युक्ति

शक्ति (पराम्बा) के अधीन ही है।

**न लोभो मोहो वा मदनमदजातं ज्वरभयं**
**न मानो द्वेषो वा तपनहिमबाधा ननु गता।**
**न शोको हर्षो वा सुतयुवति जन्यं विचलनं**
**भवानीभक्तानां जगदभिनयं वाऽत्रा चलति॥53॥**

माँ भवानी के भक्तों में न लोभ या मोह का भय, न कामवेग, न मान या द्वेष, न सर्दी गर्मी आदि द्वन्दभय, न शोक या हर्ष और न ही पुत्र, कलत्र सम्बन्धित व्याकुलता व्याप्त रहती है। वे तो जगत के जीवों के प्रति सद्व्यवहार का अभिनय मात्र करते हैं।

भाव – माँ के भक्त संसार को अभिनय मंच तथा भक्ति को ही स्थायी मानते हैं।

**पुराकालात्कालोऽनवरतजगद्भक्षणरुचः**
**महाकालश्चक्रे दलति भुवनं तीव्रतरसा**
**भवन्भक्ता लोके परिहरणदक्षा यमभयं**
**सुतुष्टा बोलेभ्योऽनुपममधिकारं प्रददति॥54॥**

सृष्टि के आरम्भ से ही काल जीवों का विनाश करता रहा है। महाकाल अपने चक्र में समस्त भुवन का तीव्रगति से पेषण कर रहा है। इतना होने पर भी हे माँ! आपके भक्त यमराज के भय को दूर करने का सामर्थ्य रखते हैं। यह आपकी महत्ता है कि आप अपने छोटे भक्तों को भी ऐसा अनोखा अधिकार प्रदान करती हो।

भाव – माँ अपने भक्तों को यमराज को भी परास्त करने का अधिकार दे देती हैं।

**वराहप्राघातैश्छलमपि हिरण्याक्षरचितं**
**विलुप्तं सौराष्ट्रं झटिति कुलवैद्योपचरितम्।**
**विधात्रे दत्ता ज्या सकलमथ मातुर्विलसनं**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥55॥**

वराह भगवान के आघातों से हिरण्याक्ष दैत्य का छल ऐसे ही लुप्त

हो गया जैसे विष का प्रभाव तुरन्त कुलवैद्यों के उपचार से समाप्त हो जाता है। तब वराहावतार ने ब्रह्मा जी को हिरण्याक्ष से मुक्त कराई गई पृथ्वी सृष्टि रचना के लिए प्रदान की। हे माँ। यह सब आपका ही विलास था। आपने ही जगत रक्षा और राक्षसों के विनाश के लिए वराह का वेष रचा। आपको नमन करता हूँ।

भाव – वराहावतार माँ का ही तेज था।

**हिरण्यक्रव्यादं वियति नखनिर्भिन्नमकरोत्**
**स्वबालं प्रह्लादं विपदि कृतमाह्लादभरितम्।**
**विचित्राविर्भूतं हि तव नरसिंहावतरणं**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥56॥**

जिसने हिरण्यकशिपु को आकाश में ही अपने नाखूनों से चीर दिया और अपने भक्त प्रह्लाद को आनन्दित कर दिया था। वह विचित्र रूप में खम्भे से प्रकट होने वाला नरसिंहावतार आप का ही स्वरूप था। आप ही जगत रक्षा व राक्षस विनाश के लिए विविध वेश धरती हैं। आपको नमन करता हूँ।

भाव – नरसिंहावतार माँ का ही अवतरण है।

**क्व माहेयी दुग्धं जगति सुरगोवंशजगणः**
**क्व नीलग्रीवो वा हरिमणिरुचेर्रश्मिसुषमा।**
**क्व लक्ष्मीपीयूषे यदि न भवदाकारकमठे**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥57॥**

हे माँ! यदि आप कच्छपावतार लेकर समुद्रमंथन में सहयोग न देती तो कहाँ से कामधेनु का अमृतमय दुग्ध और गोवंश होता, कहाँ से शिव नीलकण्ठ कहलाते, कहाँ से कौस्तुभ मणि की शोभा होती, कहाँ से लक्ष्मी और अमृत का प्राकट्य होता ? यह सब माँ की कृपा से ही सम्भव हो सका। आपको नमन करता हूँ।

भाव – कच्छपावतार माँ का ही अवतरण है।

**यदा शस्त्रे शास्त्रे पतितमभवद् क्षत्रनिवहः**
**ऋषीणां नारीणामपचितवराङ्गे विचरणे।**
**तदा शस्त्रं धृत्वा परशुमपरार्थे प्रकटितां**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥58॥**

जब शस्त्र और शास्त्र की मर्यादा से क्षत्रिय समूह रहित हो गया। ऋषियों के मस्तक छेदन तथा स्त्रियों से यौनाचार रूपी पापकर्म में निरंकुश क्षत्रिय लिप्त हो गए। तब असहायों की रक्षा के लिए परशु (फरसा) शस्त्र लेकर भगवान परशुराम के रूप में प्रकट होने वाली माँ पराम्बा जिसने राक्षस विनाश और जगत की रक्षा के लिए वेश धारण किया उनको नमन करता हूँ।

भाव – भगवान परशुराम माँ का ही अवतार थे।

**विरामारामारा मदनयतिमायादिजगतां**
**दशग्ग्रीवाभाराद्रहितमकरोद्रावणतनुः।**
**सुमर्यादागारो रघुपतिबलिष्ठो तव वपुः**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥59॥**

जो काम प्रसार के लिए विराम, संन्यासियों के लिए आनन्दस्वरूप, और मायादि जगत के लिए शत्रुस्वरूप हैं। जिन्होंने रावण के शरीर को दश सिरों के भार से मुक्त किया। जो मर्यादा का आगार हैं, बलिष्ठ हैं वे श्री रामचन्द्रजी भी आपका ही शरीरभूत हैं। जगत रक्षा व राक्षस विनाश के लिए विविध वेश धारण करने वाली माँ आपको नमन है।

भाव – भगवान श्री राम माँ का ही स्वरूप है।

व्याकरण – विराम + आराम + आराः

**सुगीता गीता याऽखिलभुवनपीताऽमरसुधा**
**न कृष्णश्श्यामा सापि सुमधुरवंशीकरधरा।**
**परित्रातुं साधोर्विघटयितुमम्बे खलदलं**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥60॥**

जिन्होंनें उस भगवद्गीता को गाया जो समस्त भुवन के लिए

सुधामय है। वह भगवान श्री कृष्ण नहीं थे। अपितु वंशी हाथ में धरण करने वाली श्री राधा जी ही थी। सज्जनों की रक्षा और दुष्टों का विनाश करने वाले श्री कृष्ण शक्ति का ही स्वरूप है। जगत की रक्षा और दुष्टों के विनाश के लिए विविध रूपों को धारण करने वाली पराम्बा का मैं भजन करता हूँ।

<u>भाव –</u> भगवान श्री कृष्ण साक्षात् ललिताम्बा ही हैं।

**अहिंसा सन्देशैर्दनुजमनुजान्तुष्टिमनयत्**
**दयादाक्षिण्यैर्वा प्रबलरिपुविद्वेषमजयत्।**
**विशास्ता बुद्धो मारजिदपि तवैवाङ्गरचितः**
**जगद्रक्षारक्षोक्षयरचितवेशामनुभजे॥61॥**

जिन्होंने अपने दिव्य अहिंसा के सन्देशों से दुर्जन–सज्जन सबको सन्तुष्ट किया। दया–दाक्षिण्यादि सद्‌गुणों से द्वेषादि षड्‌रिपु दल को जीता। वह सदुपदेष्टा इन्द्रिय विजेता भगवान बुद्ध आपके ही अङ्गों से उत्पन्न हुए थे। अतः दुष्ट दलन और भक्त भरण कर्त्री माँ का मैं भजन करता हूँ।

<u>भाव –</u> सब अवतार माँ की अँगुलियों से ही उत्पन्न हैं (श्री ललिता सहस्रनाम स्तोत्रम्)

**प्रणष्टे कोषाणां सुततरुणिसम्बन्धविफले**
**रमे! गौरि! श्यामे! नु करुणविलापाद् प्रथमतः।**
**विपद्काले देव्यास्स्मरणवशगाया भयहरा**
**हि दिव्यामूर्तिर्वै सततमपि नः पातु विजया॥62॥**

जब धन नष्ट हो जाता है। पुत्र कलत्र से सम्बन्ध टूट जाता है और जीव असहाय होकर आर्त्त स्वर से हे रमा! हे गौरी! हे श्यामा, पुकारने लगता है, उस पुकार से पहले ही (माँ की तरफ ध्यान मात्र होने पर भी) विपत्ति काल में स्मरण मात्र से भय दूर करने वाली श्रीमाता जी की दिव्य विश्वविजयी मूर्ति सतत हमारी रक्षा करे।

<u>भाव –</u> माँ चिन्तन मात्र से ही प्रसन्न होकर पुकारने से पहले इच्छा पूर्ण करती है।

**मनीषानैपुण्यं खलु चलति यावद् मतिमतां**
**त्वदीयाभाभासं प्रभवति न तावद् विमनसः।**
**यदा विद्याबुद्धेर्बलमभिभवाद् सज्जनगणः**
**सदा नौति स्तौति प्रणमति नु दुर्गामथ गतिः॥63॥**

जब तक बुद्धिमानों की बुद्धि चलती है तब तक माँ की महिमा का आभास मात्र भी नहीं होता। जब सज्जनवृन्द अपनी विद्या बुद्धि आदि के अहंकार को पराजित समझकर दुर्गा को सतत नमन करता है, स्तुति करता है तब जाकर उसको आत्मज्ञान होता है।

भाव - माँ का रहस्य विद्या-बुद्धि बल से नहीं अपितु आत्मसमर्पण से ही ज्ञात हो सकता है।

**विदित्वा सद्विद्यां तव चरणसेवाऽमृतकलां**
**विरच्य स्तोत्रादीन् हि सदनसपर्यामतनिषुः।**
**अनार्या भिद्यन्ते यतिपतिमतिस्तम्भितनयाः।**
**मताद्वैतं स्थाप्य प्रवचनमभूत्तत्त्वमसि भो॥64॥**

जगद्गुरू आद्य शंकराचार्य जी ने माँ के चरण सेवा रूपी अमृतकलात्मक विद्या को जानकर, स्तोत्रादि की रचना करके पंचसदन पूजा का प्रचार किया। संत शिरोमणि जगद्गुरू की ऋतम्भरा प्रज्ञा से अनार्य (अवैदिक) लोग पराभूत हो गए और तब उन्होंने आर्यवर्त में एकमात्र वैदिक सनातन अद्वैत मत की स्थापना करके उपदेश किया कि वह परमात्मा तुम ही हो।

भाव - जगद्गुरू शंकराचार्य जी भगवती के ही उपासक थे।

**कनीफानाथश्चर्पटिभरभरीनाथवरदाः**
**गहीनीनाथो भारतिभरथरीगोरखयतिः।**
**जलेन्द्रो मत्स्येन्द्रादिगुरुनवनाथास्तव सुताः।**
**तवाज्ञाविज्ञाने विदधति नु रक्षां भवभयाद्॥65॥**

सर्वसमर्थ कनीफानाथ, चर्पटिनाथ, भरभरीनाथ, गहीनीनाथ, भारतिनाथ, भरथरीनाथ, गोरखनाथ जालन्धरनाथ और मत्स्येन्द्रनाथ ये नौ नाथ माँ पराम्बा के ही पुत्र है। ये सब  माँ की आज्ञा के संरक्षण में ही भवभय

से जीवों की आज भी रक्षा करते हैं।

भाव – नवनाथ मातृशक्ति के ही उपासक हैं।

**विरूपाचौरंगीसरहकिलपानागबुधपाः**
**लुहीपाडेंगीपामहिकुसुलिनागार्जुनसमाः।**
**श्शलीपा डोम्भीपा करहमणिभद्राः पणहपा**
**अमी सिद्धा वृद्धास्तव चरणबद्धा गिरिसुते॥66॥**

हे माँ! विरूपाक्ष, चौरंगी, सरहपा, किलपा, नागपा, बुधपा, लुहीपा, डेंगीपा, महिपा, कुसुलिपा, नागार्जुन, शलीपा, डोम्भीपा, करहपा, मणिभद्र और पणहपा आदि ज्ञानवृद्ध 84 सिद्ध भी आपके चरणों की सेवा में बंधे हुए हैं।

भाव – समस्त सिद्ध माँ की ही शरण में हैं।

**यदा ध्यानूभक्तश्छुरति निजशीर्ष चरणयोः**
**यदा ज्यानीचौरो हरति धनिनां दर्पकरणम्।**
**यदा बंगे रामे भुवि परमहंसे पथि गते**
**तदा तुष्टा तेभ्यश्छविशशिमुखीसम्मुखमभूद्॥67॥**

जब ध्यानू भक्त माँ के चरणों में अपना शीश चढ़ाते हैं, जब ज्यानी चौर धनिकों के अहंकार के साधन (धन) को गरीबों को बाँटने हेतू हर लेते हैं, जब बंगाल के दक्षिण काली मठ में रामकृष्ण परमहंसों के रास्ते पर चल पड़ते है तभी प्रसन्न होकर माँ पूर्णेन्दुमुखी भगवती उनको दर्शन देकर कृतार्थ कर देती हैं।

भाव – पूर्ण समर्पण ही देव प्रत्यक्षीकरण का साधन है।

**स कर्त्ता काव्यानां हि सकलगुरूणामतिबलः**
**प्रयासेनावाप्तो भुवि खलु महाशैवपदवीम्।**
**महातन्त्राचार्यं तमभिनवगुप्तं बहुमतं**
**स्मरात्पूर्वं तुष्टां सुजनवरदां विस्मरति कः? 68॥**

जो काव्यादि के निर्माण कर्त्ता, सद्‌गुरूओं में श्रेष्ठ हुए। जिन्होंने अपनी तपस्या से महाशैव की पदवी प्राप्त की। उन महातन्त्राचार्य

महामहिम जगप्रसिद्ध आचार्य अभिनवगुप्त को याद करने से पूर्व उन पर कृपा करने वाली, उन्हें वरदान देने वाली, उनकी सेवा से सन्तुष्ट माँ भगवती को कौन भूल सकता है ?

भाव – आचार्य अभिनव गुप्त पर भी माँ की विशेष कृपा थी।

**महामाया दुर्गा त्वमसि चितिरूपा हिमवती**
**पराशक्तिश्श्यामा विजयपरमज्योतिरमला।**
**त्रिकोणे ऐं ह्रीं श्रीं ललितवदना षोडशकला**
**जगन्मातो देहि स्मरशरणदे! पुत्रपदवीम्॥69॥**

हे माँ! आप महामाया, दुर्गा, चितिरूपा, हैमवती, पराशक्ति, श्यामा, विजय की परमज्योति, निर्मला आदि नामों से विख्यात हो। आप श्रीचक्र के त्रिकोण में ऐं ह्रीं श्रीं स्वरूपिणी, सुमुखी, षोडशी स्वरूपिणी हो। हे माँ! आपने कामदेव को भी शरण दी है, कृपा मुझे भी पुत्र पद प्रदान करें अर्थात् मुझ निष्काम को पुत्र पद देना आपके लिए सहज ही है।

भाव – बीज (ऐं – ह्रीं – श्रीं) का रहस्य गुरूमुख गम्य है इसे परम्परा से समझें।

**त्रयी शुद्धा शक्तिस्त्रिपुररमणीज्ञानकलिका**
**भवानी श्रीविद्या परमपुरुषा कारणगता।**
**शिवा काली तारा भुवि परमधामा सुललिता।**
**जगन्मातो देहि स्मरशरणदे! पुत्रपदवीम्॥70॥**

आप त्रयी, (वेदत्रयी– गुणत्रयी– त्रिपुरा), शक्ति, त्रिपुराधिष्ठात्री, ज्ञानकला, भवानी, श्रीविद्या, परमपुरुषा, कारणभूता, शिवा, काली, तारा तथा जगत का परम धाम ललिता त्रिपुर सुन्दरी हो। हे माँ आपने कामदेव–––

भाव – माँ ही विविध देवियों के रूप में विराजित हैं।

**सुमेरौ श्रीचक्रेऽभवदगणित क्षेत्र जननी**
**महाराज्ञी यन्त्रे प्रकटितशिवे! शोभितशिवे!**
**सदा प्रेतासीनेऽभयकरि! परब्रह्ममहिषि!**
**जगन्मातो देहि स्मरशरणदे! पुत्रपदवीम्॥71॥**

हे माँ! आप सुमेरु पर्वत पर श्री चक्र में असंख्य लोकों की रचना करती हो। हे महारानी! हे सुन्दरी! हे श्री यन्त्र में प्रत्यक्ष स्वरूपिणी! हे पंच प्रेताधिष्ठित! हे अभय देने वाली! हे कामदेव को शरण देने वाली माँ! मुझ निष्काम को भी पुत्र पद प्रदान करें।

भाव – समस्त ब्रह्माण्ड माँ का ही विलास है।

**स्तुतौ ऐं ऐं ऐं ऐं नगपतिसुता रम्यवदना**
**मतौ ह्रीं ह्रीं ह्रीं ह्रीं सकलशिवशक्त्यैक्यसुलभा।**
**कलौ क्लीं क्लीं क्लीं क्लीं विकट तटि! कालीकुलमुदा**
**अवर्णाऽऽविर्भूता कचटतपवर्गा त्वमसि मा॥72॥**

स्तुति काल में आप ऐं बीजात्मक सुन्दर मुख वाली पर्वत राज पुत्री हैं। बुद्धि में आप ह्रीं बीज में शिवशक्ति की एकता का सरल आभास कराने वाली हैं। कलियुग में आप क्लीं (क्रीं) बीज में भयानक रहस्यों वाली, काली सम्प्रदाय को आनन्द देने वाली हैं और आप वर्ण रहित होने पर भी क-च-ट-त पवर्गादि रूप में प्रकट होने वाली मातृका स्वरूपा हो।

भाव – आप ही समस्त मन्त्र एवं मातृका स्वरूपिणी हैं।

**रणैर्रं रं रं रं रणति शठशीर्ष प्रदलनैः**
**भुजैर्भं भं भं भं भुजति रिपुजाले प्रचलनैः।**
**वधैर्वं वं वं वं वधति परपक्षं प्रतिपलैः**
**शुभैस्सं सं सं सं सुरति निजपक्षं विहसनैः॥73॥**

हे माँ! आप विनाशक गति से शत्रु के सिर पर चढ़ाई करती हैं। तीव्र प्रहार करने वाली भुजाओं से शत्रु जाल समाप्त करती हैं। प्रतिक्षण प्रहारों के द्वारा शत्रुसमूह का संहार करती हैं और अपने कल्याण कारक हासों के द्वारा अपक्षे पक्ष को सुख देती हैं।

भाव – रं, भं, वं, सं आदि बीजों का अर्थ सम्प्रदायानुसार गुरुमुख से समझें।

**महायोगी देवीं सितशशिकलावर्णरमणीं**
**वियोगी संसारे हि तिथिमनुवर्णेन ललिताम्।**
**लसद्बालारूपां जपति नृगणस्त्र्यक्षरमनुं**
**अगम्याज्ञानैर्वा परमगुरुगम्यामनुभजे।।74।।**

महायोगी भगवती को पूर्णचन्द्रकला (षोडशी) मन्त्र रूप से, वियोगी संसार में रहता हुआ भी तिथि वर्णात्मक (पंचदशी) मन्त्र से, साधारण भक्त तेजस्वी त्रिवर्ण (बाला मन्त्र) से भजता है। माँ भगवती अज्ञान से अगम्य है परन्तु परमगुरू के मुख से ही गम्य है।

भाव – माँ के बाला, पंचदशी, षोडशी मन्त्र गुरु मुख से ही ग्रहण करके उपास्य हैं।

**न सच्छास्त्राभ्यासैर्हवनजपविप्राशनशतैः**
**न तीर्थेष्वावासैर्हरिहरकथाकर्णगमनैः।**
**निलीनात्मा भाति प्रतिपदि हि नाऽऽडम्बरधरैः**
**महामायापादे पतनमथ यावन्न भवति।।75।।**

सद् शास्त्राभ्यास, हवन, जप, ब्राह्मण भोजन, तीर्थसेवा, स्नान, हरि हर कथा श्रवणादि से यह आत्मज्ञान नहीं होता। न ही विविध आडम्बर धारण करने से यह छिपा हुआ आत्मा प्रकट होता है। जब तक महामाया के चरणों में आत्मसमर्पण नहीं होता तब तक आत्म ज्ञान नहीं होता।

भाव – माँ की शरणागति ही आत्मज्ञान का साधन है।

**महामोहाघातः प्रबलरिपुसंघातपतनं**
**वृथैवाशापाशं कनकतरुणीकल्कनकथा।**
**यशोलिप्सादास्यं धनजननतृष्णाभवभयं**
**इदं सर्वं जालं तव चरणपीयूषमहरद्।।76।।**

मोहान्धकार पीड़ा, षड् रिपु जाल में गिरना, आशा पाश बन्धन, धन–स्त्री, रूपी दलदल की मनोहर कथा प्रेम, यश की कामना की अधीनता, धन–परिवार की तृष्णा और भवभय, इन समस्त मोहात्मक जाल को श्रीमाता के चरणों से निकलने वाली अमृत धारा ने नष्ट कर दिया है।

भाव – माँ का चरणामृत समस्त मोहमाया को हर लेता है।

**महामायाजालं विततमतिसूक्ष्मं दृढ़तमं**
**यशोमोक्षाकांक्षा क्वचिदतुलसिद्धेर्मधुरता।**
**जगन्मातो याचे न जगति कुटुम्बादिगरलं**
**सदाहं संयाचे तवचरणपीयूषलहरीम्॥77॥**

महामाया का जाल बहुत सूक्ष्म परन्तु मजबूत और विस्तृत है। कहीं यश या मोक्ष की आकांक्षा, कहीं अनुपम सिद्धियों की मधुरता है। हे माँ जगदम्बा! मैं आपसे सांसारिक परिवारादि के विष की कामना नहीं करता। परन्तु आपके चरणामृत लहरी की कामना मुझे अवश्य है।

भाव – माँ का चरणामृत सर्वोपरि है।

**ललाटे सौभाग्याभयदतिलकं कुङ्कुमयुतं**
**मुखे मन्दं मन्दं स्मितमृदुधरं बिम्बमधरम्।**
**अरालोद्याने वै शिखिनमिव ताटङ्कनटनं**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्॥78॥**

मस्तक पर सौभाग्य रूपी अभय स्वरूप कुंकुम का तिलक, मुख पर मन्दहास्य से कोमल बिम्ब फल जैसा अधरोष्ठ, केश रूपी मनोहर बगीचे में कर्णाभूषण रूपी मयूरों का नर्तन, ऐसा दिव्य स्वरूप है मेरी माता का। आप शिवरूपी अंगो वाली तथा शिव के वामांग में निवास करने वाली हो। आप मुझ अपने पुत्र को भी अपनी शरण प्रदान करो।

भाव – आप शिव को आश्रय देने वाली है अतः अपने पुत्र को भी अपनी शरण प्रदान करें।

**जटाजाले चन्द्रो धरति घनमायाऽऽवृतछविं**
**चिताभस्मालेपैरभिभवति शैलेशशिखरम्।**
**विराजन्तं राजन्तममरशिवं धारयति या**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्॥79॥**

आपके जटाजाल में चन्द्रमा वैसे ही सुशोभित होता है जैसे बादलों से घिरने पर। चिता की भस्म के लेप से शोभित शरीर पर्वतराज हिमालय

को भी जो तिरस्कृत करता है, ऐसे तेजस्वी सदाशिव को अपने अर्धशरीर में आपने आश्रय दिया है। आप शिवांगी है वामांगी है, मुझ अपने पुत्र को भी स्वीकार करो।

भाव - पूर्ववत्

**प्रबाधाबाधार्थं प्रभवति शिवार्द्धं तव वपुः**
**सुभोगान्दानार्थं विलसति चिदानन्दलतिका।**
**शिवाशर्वाभ्यां वापि लसितमखण्डेन वपुषा**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्।।80।।**

आपका आधा शिवमय शरीर विशेष बाधाओं को शांत करने में समर्थ है और आधा गौरी शरीर चिदानन्द लता के समान भोग-मोक्ष प्रद है। आप अर्धनारीश्वरा रूपी अखण्ड शरीर से सुशोभित हैं। आप शिवांगी है---

भाव - माँ ही अर्धनारीश्वरा हैं।

**सुधासिन्धो! मातः! त्वमयि! बहुधा ख्यातिमगमः**
**पिपासां जिज्ञासां नु मम हृदयाशां प्रशमय।**
**पुनर्पौन्यैः बद्धं तमतिमृतिमायाभयभरं**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्।।81।।**

हे सुधा सागर! हे माँ! आप विख्यात है अतः मेरी प्यास और मन की जिज्ञासा व आशा को शान्त करो। बार-बार मृत्युचक्र में भयभीत अपने पुत्र को अपनी शरण प्रदान करो। आप शिवांगी है-----

भाव - आप सर्वसमर्था है, कृपया मुझे अपना लो।

**नु दण्डायन्ते येऽखिलभुवनमातुश्चरणयोः**
**तदैषां पाप्मानो ननु भुवि पतन्तीह सह तैः।**
**महाघोराद्घोरं सकलमघकोषं व्ययकरी**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्।।82।।**

जो श्रीमाता के चरणों में दण्डवत् प्रणाम करते है उनके पाप भी साथ में धराशयी हो जाते हैं। आप महापातकों के समूह को भी नष्ट

करने वाली हैं। आप शिवांगी है ---

भाव - माँ के चरणों में लेटने वालों के पाप भी जमीन पर गिर जाते है और जीव पापमुक्त हो जाता है।

**गणेशे चातुर्यं वहति बहुकाव्यादिशिखरं**
**महासेने शौर्यं जयति दनुजानामपि बलम्।**
**इदं भेदं भित्त्वा सदयमवलोक्योऽहमधुना**
**शिवाङ्गी वामाङ्गी निजशरणमङ्गी कुरुसुतम्।।83।।**

आपका एक पुत्र गणेश काव्यादि कलाओं के शिखर पर विराजित होकर बुद्धिमानों में श्रेष्ठ हैं। दूसरा पुत्र कार्तिकेय राक्षसों का विजेता होने से शूरवीरों में श्रेष्ठ है। हे माँ! मैं भी तो आपका पुत्र हूँ। अतः इस भेदभाव को छोड़कर दयादृष्टि से मुझ पर दृष्टिपात करें। आप शिवांगी हैं ---

भाव - माँ! मुझे भी अपना पुत्र मानकर कृपा करें।

**विहारे वाऽऽहारे पथि गमनकाले जननि! वा**
**विचारे वाऽऽचारे हवनहविदाने भगवति!**
**प्रदाने वाऽऽदाने परमनवधाने भुविपतन्**
**स्वभावो दुस्त्याज्योशिवशिवशिवेति स्खलति वाक्।।84।।**

भ्रमण हो या भोजन या यात्रा काल हो, विचार हो या आचरण या यज्ञाहुति काल हो। आदान हो या प्रदान अथवा असावधानी से भूमि पर स्खलन हो, तब भी हे माँ! स्वभाव त्याग कठिन है क्योंकि सभी दशाओं में मेरे मुख से 'शिव-शिव-शिवा' ऐसा शब्द निकलता है।

भाव - माँ! आपका नामजप ही मेरा स्वभाव बन चुका है।

**कुलाचारैर्हीनो जपतपसि दाने न कुशलः**
**कदाचारे लीनो मम मनसि भक्तिर्न विपुला।**
**कृपापात्रत्वं नेति सदसि विहाय त्वमतुले!**
**सदा वै पुत्रत्वं सततमवधेहि स्मितमुखि!।।85।।**

माँ! मैं कुल व आचार से रहित हूँ। जप-तप-दान में भी निपुण नहीं

हूँ। कदाचार (पापाचरण) में लिप्त मेरे मन में अत्याधिक भक्ति भी नहीं है। आपकी सभा में मेरी पात्रता-अपात्रता का विचार न करके मेरी पुत्रता (कि मैं आपका पुत्र हूँ) का ही ख्याल करके मुझ पर कृपा करो।

भाव - माँ! मेरे विषय में पात्रापात्र की अपेक्षा पुत्रता को ध्यान में रखें।

**पतिस्ते ब्रह्माण्डं जनिकरणविध्वंसनपटुः**
**मनीषाविघ्नानां करणहरणौ वै तव सुतौ**
**फलं भक्तेरल्पं न भवति धराधीशतनये!**
**सुविज्ञानां गण्योऽहमभवमतीवाल्पमतिमान्॥86॥**

हे माँ! आपका पति ब्रह्माण्ड को उत्पन्न एवं नष्ट करने में समर्थ है। आपके दोनों पुत्र क्रमशः बुद्धिदान एवं विघ्नहरण में समर्थ हैं। हे! पर्वतराज सुता! भक्ति का फल सामान्य नहीं होता क्योंकि मैं मन्दबुद्धि भी आपकी कृपा से बुद्धिमानों में गिनती करने योग्य सा हो गया हूँ।

भाव - माँ का पुत्र बनने पर उपरोक्त फल तो अवश्यंभावी ही हैं।

**क्व लोके शाक्तानां सुमधुरिमपीयूषमनघम्**
**क्व कृष्णः पक्षाणां बलरहितकाकोऽल्पवयसः।**
**भवद्दीक्षापांगाद् हरसखि! हरेर्वायसमिव**
**अपात्रं हे! मातस्सरसिजसुधापात्रमभवम्॥87॥**

हे माँ! कहाँ तो संसार में शक्ति उपासकों का मधुर अमृत अर्थात् आपकी भक्ति और कहाँ मैं पंखादि बल से रहित छोटा काला कौआ। (पक्ष में) पक्ष (सम्प्रदायादि) के बल से रहित थोड़ी उम्र का कृष्ण (लेखक) नामक बालक। हे शिव पत्नी! आपकी दीक्षा दृष्टि से ही मैं वैसे ही अमृत का अधिकारी हो गया जैसे भगवान श्री राम का कौआ (काक भुसुण्डि जी) भक्ति रूपी सुधा के पात्र हो गए।

भाव - स्पष्टमेव।

**गणेशायार्यम्णे पुनरपि नमो लोकपतये।**
**नमस्ते साम्बायामरविभुशिवायादिगुरवे।**

**पुमान्नारीभेदैर्हि रहितपरब्रह्मपदगे**
**नमश्श्यामादण्डासहितललिते! कल्पतरवे॥88॥**

गणेश, सूर्य, विष्णु, शक्ति सहित व्यापक आदिगुरू शिव को नमस्कार है। पुरूष व नारी के भेंदों से रहित परब्रह्म स्वरूपिणी, श्यामा व दण्डा सहित हे कल्प वृक्ष स्वरूपिणी माँ ललिताम्बा! आपको नमन है।

भाव – माँ सगुण रूप में ही पंचाम्नाय स्वरूपा हैं। निर्गुण में परब्रह्म ही है।

**सुखं वा दु:खं वा बहुधनभरं वाऽविभवता**
**विरक्तासक्तं वा जगति सबलं वा बलवियुक्।**
**हि नि:श्वासोच्छ्वासैरपि रचय मालामनुपमां**
**समाहृत्याज्ञानं भज सततमम्बामयि! मन:॥89॥**

सुख हो या दु:ख, धन या निर्धन, विरक्त हो या आसक्त, बलवान हो या निर्बल, हे मेरे मन! श्वासों की अनोखी माला बनाकर अज्ञान को दूर करके लगातार पराम्बा भगवती का भजन करो।

भाव – प्रत्येक अवस्था में माता का भजन चलता रहना चाहिए। प्रत्येक श्वास में स्मरण होता रहे।

**दिवा वा रात्रौ वा सततमनुभूतौ प्रतिदिनं**
**मृडानीं रूद्राणीमनवरतवन्द्यामनुभजे।**
**तवापर्णे! कर्णे प्रविशति कदाचिन्मम वच:**
**कदाचिन्मातङ्गी मम वचनतुष्टा नु भविता॥90॥**

दिन हो या रात, मैं प्रतिक्षण पूज्या माँ मृडानी, रूद्राणी का भजन करता हूँ। हे माँ! कभी न कभी तो आपके कान में मेरा वचन प्रवेश करेगा, कभी न कभी तो आप मेरे भजन स्मरण से प्रसन्न हो ही जाओगी। ऐसा मेरा विश्वास है।

भाव – माँ अपने भक्तों से प्रसन्न हो ही जाती है।

**जगन्मातर्मातो मरणरहितात्मेति कथितः**
**भवद्दर्शोत्कण्ठे मम मनसि धैर्यं सुविपुलम्।**
**पुरा वा पश्चाद् वा भुवि जननजन्मान्तरमपि**
**कथंचिन्नाकिंचन् तव चरणभक्तो नु भविता॥91॥**

हे जगज्जननी! आत्मा अमर है मैंने ऐसा सुना है, और आपके दर्शनों की प्रतीक्षा के लिए मेरे मन में धैर्य बहुत है। अब या बाद में, इस जन्म या जन्मान्तर में, कभी न कभी तो मैं क्षुद्र जीव आपके चरणों का दास बन ही जाऊँगा और आप प्रसन्न हो ही जाएंगी।

भाव – माँ भक्तवत्सला हैं।

व्याकरण – कथंचिद् + न + अकिंचन्

**नियुक्ता गीर्वाणा भुवनपतिसेवातिपथिषु**
**महामायाजाले भ्रमितमिव शोचन्ति भवजाः।**
**प्रियं पुत्रं मत्त्वा निजचरणसामीप्यवरदे!**
**सुरम्याङ्के स्थाप्य क्षयरहितहर्षं जनय मे॥92॥**

आपने देवों को महादेव की सेवादि कार्यों में नियुक्त कर रखा है। जीव आपके मायाजाल में भ्रमित हो रहे हैं। हे चरण सामीप्य देने वाली माँ! मुझको अपना प्रिय पुत्र जानकर अपनी गोद में बैठाकर मुझे अक्षय हर्ष प्रदान करो।

भाव – माता ने सब देवों, जीवों को व्यस्त कर रखा है। मुझे व्यस्त न करके आपकी गोद का आनन्द प्रदान करें।

**रते नेत्रे हृष्टे भवदतिमनोल्लासिततनौ**
**सुकर्णौ तृप्तौ वै गुणरसघटैः पानकरणाद्।**
**इमौ द्वौ द्वावित्थं समुपपदितुं जेतृपदवीं**
**रसज्ञा ह्रीं ह्रीं ह्रीमिति जपति देवीं हि तरसा॥93॥**

आपके मनोहर शरीर की शोभा में लीन मेरे दोनों नेत्र आपका दर्शन कर प्रसन्न हैं। मेरे दोनों कान आपके गुणों का श्रवण करके सन्तुष्ट हैं। ये दो-दो हैं और मैं अकेली, यह सोचकर ही जिह्वा इनको (नेत्र-कान)

जीतने की इच्छा में और अधिक वेग से ह्रीं ह्रीं ऐसा माँ का नाम जपती है।

भाव – मेरी जिह्वा निरन्तर आपका भजन करती है।

**न वित्ते मत्तृष्णा मलिनमपि चित्तं न रिपुभिः**
**न रामाभोगेषु भ्रमति नु यतीव स्थिरमनः।**
**न विज्ञानापेक्षा जनपदसुखेच्छापि न पुनः।**
**भवद्भक्तिं देहि स्तुतिमधुरतुष्टे! प्रतिफलम्।।94।।**

माँ! मेरी न धन में तृष्णा है, न मेरा मन काम क्रोधादि शत्रुओं से मैला है। संन्यासी की तरह स्थिर मेरा मन स्त्री सौन्दर्यादि भोगों में भी भ्रमित नहीं है। राज्य सुख व चमत्कारों की भी मुझे इच्छा नहीं है। हे मधुर स्तुति से प्रसन्न होने वाली माँ! इस रचना से प्रसन्न होकर मुझे आप अपनी भक्ति ही प्रदान करें।

भाव – मैं केवल आपकी निर्मल भक्ति का याचक हूँ।

**अनेकैर्धीमद्भिस्स्तुतिवचनगाथास्तव कृता**
**इमा विद्यन्ते वै कनकरजताभूषणमिव।**
**यथा रम्ये भाले लुभति तिलकं केसरयुतं**
**तथाप्येतत्स्तोत्रं तव भवतु सौभाग्यसुषमा।।95।।**

माँ! अनेक विद्वानों ने आपकी स्तुति, स्त्रोत रचना की हैं। ये सभी स्तुतियाँ स्वर्ण, चाँदी आदि के आभूषणों के समान आपको प्रिय हैं। जैसे सुन्दर मस्तक पर केशर का तिलक शोभायमान होता है वैसे ही मेरे द्वारा रचित यह स्त्रोत आपके सौभाग्य की शोभा बढ़ाने वाले तिलक के समान आपको प्रिय होवे।

भाव – मेरा यह स्तोत्र स्वर्ण रजत आभूषण तो नहीं है पर आपके सौभाग्य को चार चाँद लगाने वाले तिलक (मांग) के समान आपको प्रिय होवें।

**चतुर्वेदैस्साङ्गैरुपनिषदि वा ब्राह्मणपदैः**
**पुराणैरारण्यैर्गृहकथनवार्तास्तवरवैः।**

**पुरावृत्ताख्यानैस्स्तवनरचना या तव कृता**
**मया तत्तत्स्तोत्रं मनसि कथितं नन्दतु शिवे!॥96॥**

हे माँ! साङ्ग चारों वेदों के द्वारा, उपनिषद् में, ब्राह्मण ग्रन्थों के द्वारा पुराण-आरण्यक या गृह सूत्रों के द्वारा प्राचीन आख्यानों के द्वारा जो स्तोत्र की रचना आपकी सेवा में हुई हैं, मैं उन्हीं स्तुतियों को मानसिक रूप से आपके लिए कहता हूँ, आप मुझ पर प्रसन्न हो जाओ।

भाव - इस स्तोत्र से आपको पुरातन समस्त स्तोत्रों का भी भाव प्राप्त हो।

**यदंकिन्या लेखं यदपि मनसा चिन्तितवचः**
**यदुक्तानुक्तं वापि विवरणमम्बाविषयजम्।**
**यदत्रक्षीणं तद् मम भवतु सौख्यं तव शिवे!**
**भवानि! त्वां स्तोतुं प्रभवतु सदा मे स्तुतिरियम्॥97॥**

हे भवानि! जो मेरे मन में सोचा हुआ तथा लेखनी से लिखा हुआ है। आपके विषय में कहा या न कहा हुआ विवरण इस स्तोत्र में है। उसमें यदि न्यूनता है तो वह मेरे कारण है और यदि विशेषता है तो वह आपकी कृपा के कारण है। फिर भी मेरी यह स्तुति सदैव आपको प्रसन्नता देने वाली होवे।

भाव - मेरे स्तोत्र से आप सर्वदा प्रसन्न हो।

**न रम्यं सौन्दर्यं ललितपदबन्धं न विहितं**
**न साम्यं शब्दानां न मधुरसवृत्तैर्लययुतम्।**
**इयं सूनोरम्बां प्रति विकसितस्नेहकमलं**
**सदा भावाधिक्यं हि सकलमभावं विजयते॥98॥**

न इसमें रमणीय सौन्दर्य है, न ललित पदों का बन्धन है। न शब्दों की समानता है और न मधुर रस व छन्दों की लय इसमें है। यह स्तोत्र पुत्र का माँ के प्रति विकसित प्रेम का कमल है। क्योंकि भाव की अधिकता सभी अभावों पर विजय प्रद होती है।

भाव - इसमें कमियाँ रहने पर भी यह मन के भावों से भरपूर है।

यही इसकी विजय प्रशस्ति है।

**ममेमा मा मा मा मम मम ममामा ममिम माः**
**ममामामं मे मेऽमम मम ममामूमिममुमे।**
**मिमे मामी मामूममममममामीम मम मे!**
**ममामां मीमामोऽमुममुममामा ममिममोम्॥99॥**

**ममेमा मा मा मा मम मम ममामाः ममिम माः 1**

मम इमाः माः मा माः मम मम मम अमाः ममिम माः।

मम = मेरी

इमाः = ये

माः = माताएं

मम = केवल मेरी ही

माः = माताएं

मा = नहीं हैं

मम = अपनी

मम + अमाः = अहंकार पूर्ण इन्द्रियों से युक्त (हम)

माः = माँ तक

मा = नहीं

ममिम = नहीं पहुँच सके।

व्याकरण – ममिम = मा माने लिट उ.पु.बहु.

भाव – यह आदिशक्ति विश्वमाता है, जब तक हम अहं आदि पाशग्रस्त है तब तक इनका पार पाना असंभव है। (आदरार्थ बहुवचनान्त प्रयोग हैं)

**ममामामं मे मेऽमम मम ममामूमिममुमे 2**

**मम अम आमं मे! मे अमम मम मम् आ अमूम् इमं उमे।**

मे! = हे माँ

हे उमे! = हे उमा देवी

अमम = सरलतापूर्वक (बिना कष्ट दिए)

मम = मेरे

इमं = इस (को)

आमम् = रोग को (भवबन्धन को)

आ = सर्वव्यापक

अमूम् = इस को

मम-मम् = ममता रूपी झूठी खुशी को

मे = मेरे हितार्थ

अम = नष्ट कर दो।

व्याकरण - अम = अम् खादने - लोट म.पुः एक.

भाव - हे माँ मेरे समस्त दुर्गुणों (क्रोध - ममता - भवादि रोग) को सरलतापूर्वक दूर कर दो।

**मिमे मामी मामूममममामीम मम मा। 3**
**मिमे मामी माम् ऊम् अमम् अममम् आमीम मम मा।**

मामी = मेरी

माम् = माँ को

ऊम् = व्याकुलता पूर्वक

मिमे = पुकारता हूँ

मम मे! = मेरी माँ!

अमम् = मुझ दास की ओर

अममम् = वैरागी की ओर

आमीम = आ जाओ

व्याकरण - मिमे = माङ् शब्दे माने च जुहो. आत्मे. लट्.उ.ए.

आमीम = आ+मीम् गतौ- भवा. परस्मै. लोट म.ए.

भाव - हे माँ! मुझ विरक्त की पुकार सुनो और मेरे ऊपर कृपा करो।

**ममामां मीमामोऽमुममुममामा ममिममोम् 4**

मम अमां मीमामः अमुम् अमुम् उम् अमा माः मम् इमं ओम्

इमं = इस

मम् = चिदानन्द (को)

अमुम् = इस

उम् = अव्यय (जिसका कोई व्यय नहीं है पूर्ण ब्रह्म को)

ओम् = ऊँ कार को

मम = मेरी, अमुं = उस

अमां = असीमित माँ के रूप में

अमा मा: = ब्रह्मा-विष्णु-शिव के साथ

मीमाम: = आह्वान करते है।

व्याकरण - अमा = सह, मा: (मश्च मश्च मश्च = मा:)

मीमाम: - मीम् - भवा लट् उ.पु.बहु.

भाव - वह माँ ही परब्रह्म ओंकार है हम त्रिदेवों सहित उसका गुणगान करते हैं।

**प्रसन्नात्मारामो विमलमनसा भक्तिभरितः**
**सुमध्वानन्देनोपहरति गिरा श्लोकशतकम्।**
**विनाव्यक्ताधात्री स्पृहणकथनात्पूर्वमतिदा**
**यशश्श्रीर्वर्चस्वं सुतयुवतिमोक्षं दिशति तम्।।100।।**

जो व्यक्ति प्रसन्न होकर निर्मल मन से भक्ति भाव पूर्वक इन सौ श्लोकों का उपहार माँ को देता है (अर्थात् गायन करता है) बिना कहे ही समझने वाली माँ ललिताम्बा, इच्छा व्यक्त करने से पहले ही स्तुति कर्त्ता को यश लक्ष्मी पद पुत्र-स्त्री आदि भौतिक सुख और मोक्ष पद को प्रदान करती हैं।

भाव - माँ अन्तर्यामी हैं। वह भक्त का योगक्षेम का ध्यान रखती हैं।

**पिता जोगीरामः युगलमथ लीलावतिवरा**
**भवे योगीराजावतरमथ लीलावतियुतम्।**

**महद्दावाग्नावापि गुरुजयरामो हिमकरः**
**ददन्दीक्षादानं कनकमकरोद्बालकनकम्॥101॥**

मेरे पिता जोगी राम व माता लीलावती मानों योगीराज (सदाशिव) एवं लीलावती (ललिताम्बा) का ही प्रतिरूप हैं। और संसार रूपी अग्नि की पीड़ा से मुक्ति दिलाने वाले चन्द्रमा के समान पूज्य सद्गुरुदेव आचार्य श्री जयराम जी महाराज धन्य हैं जिन्होंने मन्त्र दीक्षा देकर मुझ गुणहीन बालक को तेज से परिपूर्ण कर दिया।

भाव – कनक (ढाक वृक्ष) से स्वर्ण में परिवर्तित कर दिया।

**इति श्री ललिताशतकम्**

